भेनिवेशी लक्ष्मीमेव प्रथमम्। इयं हि लक्ष्मी क्षीरसागरात् पारिजातपल्लवेभ्यो रागमिन्दुशकलादेकान्तवक्रतामुच्चैःश्रवसश्चलतां कालकूटान्मोहनशक्तिं मदिराया मदं कौस्तुभमणेर्नैष्ठुर्यमित्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। इयमनार्या लब्धापि खलु दुःखेन परिपाल्यते। परिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। तदस्मिन् महामोहकारिणि यौवने कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैर्न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न शोच्यसे विद्वद्भिः। कामं भवान् प्रकृत्यैव धीरः पित्रा च समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय स्वबन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति। इत्येतावदभिधायोपशशाम॥

## ८। ब्रह्मज्ञानविषयकः गुरुशिष्यसंवादः।

श्रुतिस्मृतिभिर्गृहीतपरमात्मलक्षणः शिष्यः संसारसागरादुत्तितीर्षुः पृच्छेत्—तत्त्वमसि सोम्येति।

स यदि ब्रूयात्—ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यास गृहस्थो वा । इदानीमस्मि परमहंसपरिव्राट् संसारसागराज्जन्ममृत्युमहाग्राहादुत्तितीर्षुरिति ।

आचार्यो ब्रूयात्—इहैव तव सोम्य मृतस्य शरीरं वयोभिरद्यते मृद्भावं वापद्यते । तत्र कथं संसारादुद्धर्तुमिच्छसीति । न हि नद्या अवरे कूले भस्मीभूते नद्याः पारं तरिष्यसीति ।

स यदि ब्रूयात्—अन्योऽहं शरीरात् । शरीरं तु जायते म्रियते वयोभिरद्यते मृद्भावमापद्यते शस्त्राग्न्यादिभिश्च विनाश्यते व्याध्यादिभिश्च प्रयुज्यते । तस्मिन्नहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः पुनः पुनः शरीरविनाशे धर्माधर्मवशात् शरीरान्तरं यास्यामि पूर्वनीडविनाशे पक्षीव नीडान्तरम् । तस्मान्नित्य एवाहं शरीरादन्य । शरीराण्यागच्छन्त्यपगच्छन्ति च वासांसीव पुरुषस्येति ।

आचार्यो ब्रूयात्—साध्ववादी । सम्यक् पश्यसि कथं मृषावादीर्ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यास गृहस्थो वा इदानीमस्मि परमहंसपरिव्राडिति ।

स यदि ब्रूयात्—भगवन् कथमहं मृषावादिष्मिति ।

तं प्रति ब्रूयादाचार्य —यतस्त्वं भिन्नजात्यन्वयसंस्कारं शरीरं जात्यन्वयवर्जितस्यात्मनः प्रत्यभ्यज्ञासीर्ब्राह्मणपुत्रोऽदोन्वय इत्यादिना वाक्येनेति ।

स यदि पृच्छेत्—कथं भिन्नजात्यन्वयसंस्कारं शरीरं कथं वाहं जात्यन्वयसंस्कारवर्जित इति ।

आचार्यो ब्रूयात्—शृणु सोम्य यथेदं शरीरं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं त्वं च जात्यन्वयसंस्कारवर्जित इत्युक्त्वा तं स्मारयेत् परमात्मलक्षणं श्रुतिस्मृत्युक्तमिति ॥

---

आह्लादकत्वं च निशाधिनाथा-
दादाय राज्ञः क्रियते शरीरम्॥ २॥
सर्वदेवमयो राजा मनुना सम्प्रकीर्तितः।
तस्मात्तं देववत्पश्येन्न व्यलीकेन कर्हिचित्॥ ३॥
सर्वदेवमयस्यापि विशेषो नृपतेरयम्।
शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे॥ ४॥
अपि स्वल्पममता यः पुरो वदति भूभुजाम्।
देवानां च विनश्येत स द्रुतं सुमहानपि॥ ५॥
अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः॥ ६॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥ ७॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्।
कुलं दहति राजाग्निः सपशुद्रव्यसंचयम्॥ ८॥

## ११। अराजकं राष्ट्रम्।

(रामायण—अयोध्याकाण्ड—सर्ग ६७)

इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम्।
अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात्॥ १॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे॥ २॥
अराजके धनं नास्ति नास्ति भार्याप्यराजके।
इदमत्याहितं चान्यत् कुतः सत्यमराजके॥ ३॥
नाराजके जनपदे धनवन्तः सुरक्षिताः।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः॥ ४॥
नाराजके जनपदे बद्धघण्टा विषाणिनः।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः॥ ५॥

नाराजके जनपदे वणिजो दूरगामिन ।
गच्छन्ति चेममध्वान बहुपण्यसमाचिता ॥ ६ ॥
यथा ह्यनुदका नद्यो यथा वाप्यतृण वनम्।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ ७ ॥
नाराजके जनपदे स्वक भवति कस्यचित्।
मत्स्या इव जना नित्य भक्षयन्ति परस्परम् ॥ ८ ॥
राजा सत्य च धर्मश्च राजा कुलवता कुलम्।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ९ ॥
यमो वैश्रवण शक्रो वरुणश्च महाबल ।
विशिष्यन्ते नरेन्द्रेण वृत्तेन महता तत ॥ १० ॥
अहो तम इवेद स्यान्न प्रज्ञायेत किंचन।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ११ ॥

---

## १२। पञ्चवटी।

( रामायण—अरण्यकाण्ड—सर्ग १५ )

तत पञ्चवटी गत्वा नानाव्यालमृगायुताम्।
उवाच लक्ष्मण रामो भ्रातर दीप्ततेजसम् ॥ १ ॥
आगता स्म यथोद्दिष्ट य देश मुनिरब्रवीत्।
अय पञ्चवटीदेश सौम्य पुष्पितकानन ॥ २ ॥
सर्वतश्चार्यता दृष्टि कानने निपुणो ह्यसि।
आश्रम कतरस्मिन्नो देशे भवति समत ॥ ३ ॥
रमते यत्र वैदेही त्वमह चैव लक्ष्मण।
तादृशो दृश्यता देश सनिकृष्टजलाशय ॥ ४ ॥
एवमुक्तस्तु रामेण लक्ष्मण संयताञ्जलि ।
सीतासमक्ष काकुत्स्थमिद वचनमब्रवीत् ॥ ५ ॥

परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ६ ॥
सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महाद्युतिः।
विमृशन् रोचयामास देशं सर्वगुणान्वितम् ॥ ७ ॥
स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि।
हस्ते गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ८ ॥
अयं देशः समः श्रीमान् पुष्पितैस्तरुभिर्वृतः।
इहाश्रमपदं रम्यं यथावत् कर्तुमर्हसि ॥ ९ ॥
इयमादित्यसंकाशैः पद्मैः सुरभिगन्धिभिः।
अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ॥ १० ॥
यथाख्यातमगस्त्येन मुनिना भावितात्मना।
इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ॥ ११ ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता।
नातिदूरे न चासन्ने मृगयूथनिपीडिता ॥ १२ ॥
मयूरनादिता रम्याः प्रांशवो बहुकन्दराः।
दृश्यन्ते गिरयः सौम्याः फुल्लैस्तरुभिरावृताः ॥ १३ ॥
इदं पुण्यमिदं रम्यमिदं बहुमृगद्विजम्।
इह वत्स्याम सौमित्रे सार्धमेतेन पक्षिणा ॥ १४ ॥
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा।
अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ १५ ॥

---

## १३। श्रीनिवासस्थानानि।

(महाभारत—अनुशासनपर्व—२२ अध्याय)

युधिष्ठिर उवाच।

कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच ।

अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसन्निधौ पर्यपृच्छत ॥ २ ॥

नारायणस्याङ्कगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवक्त्राम् ।
कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ॥ ३ ॥

कानीह भूतान्युपसेवसे त्वं सन्तिष्ठसे कानि च सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ ४ ॥

एवं तदा श्रीरभिभाष्यमाणा देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं मनोहरं चन्द्रमुखी प्रसन्ना ॥ ५ ॥

श्रीरुवाच ।

वसामि नित्यं सुभगे प्रगल्भे दक्षे नरे कर्मणि वर्तमाने ।
अक्रोधने देवपरे कृतज्ञे जितेन्द्रिये नित्यमुदीर्णसत्त्वे ॥ ६ ॥

नाकर्मशीले पुरुषे वसामि न नास्तिके सांकरिके कृतघ्ने ।
न भिन्नवृत्ते न नृशंसवृत्ते न चाविनीते न गुरुष्वसूयके ॥ ७ ॥

ये चाल्पतेजोबलसत्त्वमाना क्लिश्यन्ति कुप्यन्ति च यत्र तत्र ।
न चैव तिष्ठामि तथाविधेषु नरेषु संगुप्तमनोरथेषु ॥ ८ ॥

स्वधर्मशीलेषु च धर्मवित्सु वृद्धोपसेवानिरते च दान्ते ।
कृतात्मनि क्षान्तिपरे समर्थे क्षान्तासु दान्तासु तथाबलासु ॥ ९ ॥

स्वाध्यायनित्येषु सदा द्विजेषु क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि शूद्रे च शुश्रूषणनित्ययुक्ते ॥ १० ॥

---

## १४ । दम्पतीस्नेहः ।

( महाभारत—शान्तिपर्व—अध्याय १४४ )

भीष्म उवाच ।

अथ वृक्षस्य शाखायां विहङ्गः सुसुहृज्जनः ।
दीर्घकालोषितो राजस्तत्र चित्रतनूरुहः ॥ १ ॥

तस्य काव्यगता भार्या चरितुं नाभ्यवर्तत ।
प्राप्ता च रजनी दृष्ट्वा स पश्चात् पर्यतप्यत ॥ २ ॥
वात्सर्यं महच्चासीत्र चागच्छति मे प्रिया ।
किं नु तत्कारणं येन साद्यापि न निवर्तते ॥ ३ ॥
अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने ।
तया विरहितं चेदं शून्यमद्य गृहं मम ॥ ४ ॥
पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥ ५ ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥ ६ ॥
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥ ७ ॥
न भुङ्क्ते मय्यभुक्ते या नास्नाते स्नाति सुव्रता ।
नातिष्ठत्युपतिष्ठेत शेते च शयिते मयि ॥ ८ ॥
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ।
प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी ॥ ९ ॥
पतिधर्मव्रता साध्वी प्राणेभ्योऽपि गरीयसी ।
यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥ १० ॥
सा हि श्रान्तं क्षुधार्तं च जानीते सा तपस्विनी ।
अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥ ११ ॥
वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद् गृहम् ।
प्रासादोऽपि तया हीनः कान्तार इति निश्चितम् ॥ १२ ॥
धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्वासकारिका ॥ १३ ॥
भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिंल्लोकयात्रासहायिनी ॥ १४ ॥

तथा रोगाभिभूतस्य नित्य कृच्छ्रगतस्य च ।
नास्ति भार्यासम मित्र नरस्यार्तस्य भेषजम् ॥ १५ ॥
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गति ।
नास्ति भार्यासमो लोके सहायो धर्मसग्रहे ॥ १६ ॥
यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्य यथारण्य तथा गृहम् ॥ १७ ॥

भीष्म उवाच ।

एव विलपतस्तस्य द्विजसगार्तस्य वै सदा ।
गृहीता शकुनिघ्नेन भार्या शुश्राव भारतीम् ॥ १८ ॥

कपोत्युवाच ।

अहोऽतीव सुभाग्याह यस्या मे दयित पति ।
असतो वा सतो वापि गुणानेव प्रभाषते ॥१९॥
सा हि स्त्रीत्वमगन्तव्या यस्या भर्ता तु तुष्यति ।
तुष्टे भर्तरि नारीणा तुष्टा स्यु सर्वदेवता ।
अग्निसाक्षिकमप्येतद् भर्ता हि दैवत परम् ॥ २० ॥
दावाग्निनेव निर्दग्धा सपुष्पस्तवका लता ।
भस्मीभवति सा नारी यस्या भर्ता न तुष्यति ॥ २१ ॥

---

## १५ । सयमः ।

( महाभारत—शान्तिपर्व—अध्याय २२१ )

भीष्म उवाच ।

न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभि ।
ऋषयश्चक्रिरे धर्म योऽनूचान स नो महान् ॥ १ ॥
तपोमूलमिद सर्व यन्मा पृच्छसि पाण्डव ।
तदिन्द्रियाणि सयम्य तपो भवति नान्यथा ॥ २ ॥

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव सिद्धिमाप्नोति मानवः ॥३॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
योगस्य कलया तात न तुल्यं विद्यते फलम् ॥४॥

---

## १६। आपदि शोकत्यागः।

(महाभारत—शान्तिपर्व—अध्याय २२३)

संतापाद् भ्रश्यते रूपं संतापाद्भ्रश्यते श्रियः।
संतापाद्भ्रश्यते चायुर्धर्मश्चैव सुरेश्वर ॥ १ ॥
विनीय खलु तद् दुःखमागतं वै मनस्सुखम्।
ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता ॥ २ ॥
यथा यथा हि पुरुषः कल्याणे कुरुते मनः।
तथैवास्य प्रसिध्यन्ति सर्वार्था नात्र संशयः ॥ ३ ॥
ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च वने मुनींश्च।
कान्नापदो नोपनमन्ति लोके परावरज्ञास्तु न संभ्रमन्ति ॥४॥
न पण्डितः क्रुध्यति नाभिपद्यते न चापि संसीदति न प्रहृष्यति।
न चार्थकृच्छ्रव्यसनेषु शोचते स्थितः प्रकृत्या हिमवानिवाचलः ॥५॥
यमर्थसिद्धिः परमा न हर्षयेत् तथैव काले व्यसनं न मोहयेत्।
सुखं च दुःखं च तथैव मध्यमं निषेवते यः स धुरंधरो नरः ॥६॥
*यां यामवस्थां पुरुषोऽधिगच्छेत् तस्यां रमेतापरितप्यमानः।*
एवं प्रवृद्धं प्रणुदन्मनोजं संतापनीयं सकलं शरीरात् ॥ ७ ॥
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति।
प्राप्तव्यान्येव चाप्नोति दुःखानि च सुखानि च ॥ ८ ॥
एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः।
कुशली सर्वदुःखेषु स वै सर्वधनो नरः ॥ ९ ॥

---

# १७। संतोषः।

(महाभारत शान्तिपर्व-अध्याय ३३८)

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ १ ॥
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ २ ॥
भैषज्यमेतद् दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ ३ ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ४ ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंसर्गो गृध्येत्तत्र न पण्डितः ॥ ५ ॥
सुखाद् बहुतरं दुःखं जीविते नात्र संशयः ।
स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ ६ ॥
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
अतृप्ता यान्ति विध्वंसं संतोषं यान्ति पण्डिताः ॥ ७ ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ८ ॥
अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् ।
तस्मात् संतोषमेवेह धनं पश्यन्ति पण्डिताः ॥ ९ ॥
निमिषमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ॥ १० ॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन यश्चरेत् स सुखी भवेत् ॥ ११ ॥

---

## १८। आत्मज्ञानम्—कर्त्तव्यज्ञानम्।

(महाभारत—शान्तिपर्व—अध्याय ३२९)

किं ते धनेन किं बन्धुभिस्ते किं ते पुत्रैः पुत्रक यो मरिष्यसि।
आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताश्च सर्वे॥ १॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम्॥ २॥
अनुगम्य विनाशान्ते निवर्तन्ते हि बान्धवाः।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा॥ ३॥
एवमभ्याहते लोके कालेनोपनिपीडिते।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु॥ ४॥
अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः।
सम्यक् स्वधर्मं कृत्वेह परत्र सुखमश्नुते॥ ५॥

न देहभेदे मरणं विजानतां न च प्रणाशः स्वनुपालिते पथि।
धर्मं हि यो वर्धयते स पण्डितो य एव धर्माच्च्यवते स दह्यते॥ ६॥

यस्तु भोगान् परित्यज्य शरीरेण तपश्चरेत्।
न तेन किंचिन्न प्राप्तं तन्मे बहुमतं फलम्॥ ७॥
मातापितृसहस्राणि पुत्रदारशतानि च।
अनागतान्यतीतानि कस्य ते कस्य वा वयम्॥ ८॥
अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित्।
न तं पश्यामि यस्याहं तं न पश्यामि यो मम॥ ९॥
न तेषां भवता कार्यं न कार्यं तव तैरपि।
स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति॥ १०॥
इह लोके हि धनिनां परोऽपि स्वजनायते।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति॥ ११॥
संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः।
ततः क्लेशमवाप्नोति परत्रेह तथैव च॥ १२॥

पश्यति च्छिन्नभूतं हि जीवलोकं स्वकर्मणा ।
तत् कुरुष्व तथा पुत्र कृत्स्नं यत् समुदाहृतम् ॥ १३ ॥
तदेतत् सम्प्रदृश्यैव कर्मभूमिं प्रपश्यत ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥ १४ ॥
धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो वशी ॥ १५ ॥

## १६। अजविलापः।

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ १ ॥
कुसुमान्यपि गात्रसंगमात् प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः ॥ २ ॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ३ ॥
स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया ॥ ४ ॥
अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ५ ॥
मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥ ६ ॥
शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ७ ॥
नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥ ८ ॥

कलमन्यभृतासु भाषित कलहंसीषु मदालस गतम् ।
पृषतीषु विलोलमीक्षित पवनाधूतलतासु विभ्रमा ॥ ८ ॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मा निहिता सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथ हृदय न त्ववलम्बितु क्षमा ॥ १० ॥
धृतिरस्तमिता रतिश्च्युता विरत गेयमृतुर्निरुत्सव ।
गतमाभरणप्रयोजन परिशून्य शयनीयमद्य मे ॥ ११ ॥
गृहिणी सचिव सखी मिथ. प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वा वद किं न मे हृतम् ॥ १२ ॥

---

## २० । प्रकीर्णानि सुभाषितपद्यानि ।

येषा न विद्या न तपो न दान
ज्ञानं न शील न गुणो न धर्म. ।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥ १ ॥
यस्यास्ति वित्त स नर कुलीन ।
स पण्डित. स श्रुतिमान् गुणज्ञ ।
स एव वक्ता स च दर्शनीय
सर्वे गुणा काञ्चनमाश्रयन्ते ॥ २ ॥
धनैर्निष्कुलीना कुलीना भवन्ति
धनैरापद मानवा निस्तरन्ति ।
धनेभ्य. परो बान्धवो नास्ति लोके
धनान्यर्जयध्व धनान्यर्जयध्वम् ॥ ३ ॥
वर वनं व्याघ्रगजेन्द्रसेवितं
द्रुमालय पत्रफलाम्बुभोजनम् ।
तृणानि शय्या वसनं च वल्कल
न बन्धुमध्ये धनहीनजीवनम् ॥ ४ ॥

तानीन्द्रियाणि सकलानि तदेव कर्म
    सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
    अन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ५ ॥
निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
    लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
    न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ ६ ॥
दानाय लक्ष्मीः सुकृताय विद्या
    चिन्ता परब्रह्मविनिश्चयाय ।
परोपकाराय वचांसि यस्य
    वन्द्यस्त्रिलोकीतिलकः स एव ॥ ७ ॥
तापं हन्ति सुखं सूते जीवयत्युज्ज्वलं यशः ।
अमृतस्य प्रकारोऽयं दुर्लभः साधुसंगमः ॥ ८ ॥
रसायनमयी शीता परमानन्ददायिनी ।
नानन्दयति कं नाम साधुसङ्गतिचन्द्रिका ॥ ९ ॥
यः स्नातः शीतसितया साधुसंगतिगङ्गया ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ १० ॥
  पात्रं पवित्रयति नैव गुणान् क्षिणोति
    स्नेहं न संहरति नापि मलं प्रसूते ।
  दोषावसानरुचिरश्चलता न धत्ते
    सत्संगमः सुकृतसद्मनि कोऽपि दीपः ॥ ११ ॥
उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ १२ ॥
  प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
    शिरसि निहितभारा नारिकेला नराणाम् ।

उदकममृतकल्पं ते ददुर्जीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १३ ॥
उदयति यदि भानुः पश्चिमे दिग्विभागे
विकसति यदि पद्मं पर्वतानां शिखाग्रे ।
प्रचलति यदि मेरुः शीततां याति वह्नि-
र्न चलति खलु वाक्यं सज्जनानां कदाचित् ॥ १'
परीक्षका यत्र न सन्ति देशे
नार्घन्ति रत्नानि समुद्रजानि ।
न वेत्ति यो यस्य गुणप्रकर्षं
स तं सदा निन्दति नात्र चित्रम् ॥ १५ ॥

अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ १६ ॥
गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति पण्डिताः ॥ १७ ॥
विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥ १८ ॥
गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम् ।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ॥ १९ ॥
नाकवित्वमधर्माय व्याधये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥ २० ॥
काव्यान्यपि यदीमानि[1] व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥ २१ ॥
विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।

---

१। अर्थात् ललितसौन्दर्ययुक्ता कविता।

विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः ॥ २२ ॥
केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजा ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ २३ ॥
साहित्यसङ्गीतकलाविहीनः
साक्षात् पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमान—
स्तद् भागधेयं परमं पशूनाम् ॥ २४ ॥
इतरतापशतानि यथेच्छया
वितर तानि सहे चतुरानन ।
अरसिकेषु रसाभिनिवेदनं
शिरसि मा लिख मा लिख मा लिख ॥ २५ ॥
अन्या सखे बधिरलोकनिवासभूमौ
किं कूजितेन खलु कोकिल कोमलेन ।
एते हि दैवहतकास्तदभिन्नवर्णं
त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥ २६ ॥
सपदि विलयमेतु राज्यलक्ष्मी—
रुपरि पतन्त्वथवा कृपाणधाराः ।
अपहरतुतरां शिरः कृतान्तो
मम तु मतिर्न मनागपैतु धर्मात् ॥ २७ ॥
भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ २८ ॥

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम्॥ २९॥
पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति तज्ज्ञाः॥ ३०॥
तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान्।
मान्यान् मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां लक्षणम्॥ ३१
लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत् तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्।
सौजन्यं यदि किं निजैः सुमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना॥३२॥
वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले—
ष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥ ३३॥
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकर—
मसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥ ३४॥
प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः।

अनुत्सेको लक्ष्म्या निरभिभवसारा परकथा.
सतां केनोद्दिष्टं विषमममसिधाराव्रतमिदम् ॥ ३५ ॥

यावत् स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः।
आत्मश्रेयसि तावदेव पुरुषैः कार्यः प्रयत्नो महान्
प्रोद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ३६ ॥

गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ३७ ॥

चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः।
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः
सम्मीलने नयनयोर्नहि किंचिदस्ति ॥ ३८ ॥

झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते
ग्रहणसमयवेला वर्तते शीतरश्मेः।
अयि सुविमलकान्तिं प्रेक्ष्य नूनं स राहु-
र्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥ ३९ ॥

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥ ४० ॥

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥ ४१ ॥

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया ,
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥ ४२ ॥

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ४३ ॥
पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सव
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ४४ ॥
अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥ ४५ ॥
अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ ४६ ॥
अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ ४७ ॥

विरलविरलाः स्थूलास्तारा कलाविव सज्जना
मन इव मुनेः सर्वत्रैव प्रसन्नमभून्नभः ।
व्यपसरति च ध्वान्तं चित्तात् सतामिव दुर्जनः
व्रजति च निशा क्षिप्रं लक्ष्मीर्निरुद्यमनादिव ॥ ४८ ॥
अभूत् पिङ्गा प्राची रसपतिरिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणात् क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते विनयरहितानामिव गुणाः ॥ ४९ ॥

म्लानस्य जीवकुसुमस्य विकासनानि
    सतर्पणानि सकलेन्द्रियमोहनानि।
एतानि ते सुवचनानि सरोरुहाक्षि
    कर्णामृतानि मनसश्च रसायनानि॥ ५०॥
दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
    मित्रावसानसमये विहितोदयोऽपि।
चन्द्रस्तथापि हरवल्लभतामुपैति
    नैवाश्रितेषु गुणदोषविचारणा सताम्॥ ५१॥
नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
    तत् कल्याणि त्वमपि सुतरां मा गमः कातरत्वम्।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
    नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥ ५२॥
श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
    वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
    हन्तैकस्मिन् क्वचिदपि न ते चण्डि सादृश्यमस्ति॥ ५३॥
घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
    छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
    न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्॥ ५४॥
घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं
    वने वासः कन्दैरशनमपि दुःस्थं वपुरिदम्।
अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
    क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे॥ ५५॥
दूरादर्थं घटयति नवं दरतयापशब्दं
    त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु।

मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ ५६ ॥
उत्तिष्ठ क्षणमेकमुद्वह गुरुं दारिद्र्यभारं सखे
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम्।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ५७
क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु—
र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥ ५८ ॥
यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि।
यत्र नास्ति गुरुगौरवपूजा तानि किं बत गृहाणि वनानि ॥५

राम.—सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
लक्ष्मण.—चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति
राम.—वत्सैतद्विदितं कथं नु भवता

लक्ष्मण.— धत्ते कुरङ्गं यत

राम.—क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥६०

हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः
सरिद्वीचीवातः कुपितफणिनिश्वासपवनः।
नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं
मम त्वद्विश्लेषात् सुमुखि विपरीतं जगदिदम् ॥ ६१ ॥

कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं
को जानीते निभृतमुभयोरावयोः स्नेहसारम्।
जानात्येकं शशधरमुखि प्रेमतत्त्वं मनो मे
त्वामेवैतच्चिरमनुगतं तत् प्रिये किं करोमि ॥ ६२ ॥

बोद्धारो मत्सरग्रस्ता प्रभव स्मयदूषिता ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ ६३ ॥
एह्यागच्छ समाश्रयासनमिद कस्माच्चिराद् दृश्यसे
का वार्ता ह्यतिदुर्बलोऽसि कुशल प्रीतोऽस्मि ते दर्शनात् ।
एव ये समुपागतान् प्रणयिन प्रह्लादयन्त्यादरात्
तेषा युक्तमशङ्कितेन मनसा हर्म्याणि गन्तु सदा ॥ ६४ ॥
मा गा इत्यपमङ्गल व्रज पुन स्नेहेन हीन वच.
तिष्ठेति प्रभुता यथारुचि कुरु ह्येषाप्युदासीनता ।
नो जीवामि त्वया विनेति वचन सभाव्यते वा न वा
तन्मा शिक्षय मित्र यत् समुचित वाक्य त्वयि प्रस्थिते ॥६५
मा भूत् सज्जनसङ्गो यदि सङ्गो मा पुन स्नेह ।
स्नेहो यदि मा विरहो यदि विरहो मा पुनश्च जीवितम् ॥६६॥
बाले नाथ विमुञ्च मानिनि रुष रोषान्मया कि कृत
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्कि रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥६७॥
अम्बा कुप्यति तात मूर्ध्नि विधृता गङ्गेयमुत्सृज्यता
विद्वन् षण्मुख सतत मयि रता तस्या गति का वद ।
कोपाटोपवशाद्विदिद्रवदन प्रत्युत्तर दत्तवान्
अम्भोधिर्जलधि पयोधिरुदधिर्वारानिधिर्वारिधि ॥ ६८ ॥
रत्नाद्रिर्निर्जायते मथ्यमानाङ्कुरिस्तोय खन्यमाना ददाति ।
साहसाना नास्त्यसाध्य नराणा मार्गारब्धा सर्वयत्ना फलन्ति ॥६९॥
गुणाना वा विशालाना सत्काराणा च नित्यश ।
कर्तार सुलभा लोके विज्ञातारस्तु दुर्लभा. ॥ ७० ॥
यस्या न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान् न च पुनर्वीजन्ति यस्या भयात् ।

वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥ ७१ ॥
रे रे चातक सावधानमनसा मित्र क्षणं श्रूयता—
मम्भोदा बहवो हि सन्ति गगने सर्वेऽपि नैतादृशाः ।
केचिद् वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥७२
यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून् मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ ७३ ॥
नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु—
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ७४ ॥
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा[1] ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ७५ ॥

## २१ । स्तुतिपद्यानि ।

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥ १ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ २ ॥
मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
लक्ष्मीकान्तं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥ ३ ॥

---

१ अर्यमन् तथा पूषन् शब्दके प्र०-ए० व० में केवल दीर्घ होता है। पूषा पूषणौ पूषणः पूषणम् पूषणौ।

शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशुमपि वरं दक्षिणाङ्गे वहन्तम्।
नागं पाशं च घण्टां डमरुकसहितं चाङ्कुशं वामभागे
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं भजामि॥ ४॥
रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम्।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्॥ ५॥
असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति॥ ६॥
महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि।
तयोर्न भेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे॥ ७॥
यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै—
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥ ८॥
रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर॥ ९॥
इतो न किंचित् परतो न किंचिद्
यतो यतो यामि ततो न किंचित्।
विचार्य पश्यामि जगन्न किंचित्
स्वात्मावबोधादधिकं न किंचित्॥ १०॥

# उद्धृत गद्यपद्योंपर टिप्पणी।

---

१।—वनोद्देशे (उद्देश = स्थान)—वनभूमिमें। चटकदम्पती—(चटक—एक पक्षी + दम्पती, द्वन्द्व स०, जाया च पतिश्च जायापती जम्पती दम्पती वा)—चटक पक्षियोंका जोडा। निलय—स्थान। गच्छता कालेन—समयके बीतनेपर। घर्मार्त (घर्मेण आर्त, आर्त = आ + ऋत, ऋ का भूत कृदन्त आ + ऋ = आर् ६७ पृष्ठमें टिप्पणी देखो)—गर्मीसे पीडित। समोत्कर्षात् (उत्कर्ष = आधिक्यम्, अधिकता)—गर्वकी अधिकतासे। पुष्करम् सूंड। विशीर्णानि (वि + शॄ—क्र्यादि-पर का भूतकृदन्त)—टोड़े। आयुःशेषतया = आयुः शेषो ययोस्तौ आयुःशेषौ तयोर्भावः आयुःशेषता तया—क्योंकि आयु समाप्त न हुई थी, आयुके अवशेष होनेसे। चटकौ = चटकश्च चटकी च—एकशेष समास। पितरौ तथा श्वशुरौ ये दूसरे एकशेष समासके उदाहरण हैं। मातापितरौ तथा श्वश्रूश्वशुरौ ये पितरौ तथा श्वशुरौ के वैकल्पिक रूप हैं। कथमपि—किसी प्रकार। विशेष—भेद। श्लेष्माश्रु (श्लेष्मन् पु कफ)—कफमिश्रित आंसू। (मध्यमपदलोपी समा०, श्लेष्मणा मिश्रितमश्रु श्लेष्माश्रु)। गजापसदस्य (अपसद-पु नीच, समासके अन्तमें इसका अर्थ 'अधम', 'निन्दित' होता है।)—नीच गजका। [illegible]—भ्रमरी जातिमें उत्पन्न। विधेयज्ञ (उपपदसमास, विधेयं जानातीति विधेयज्ञः)—जो यह जानता है कि क्या करना चाहिये। सुहृत्ता—मित्रकी तरह। उत्तरपदस्थो भूतशब्दः समार्थः। कभी इसका अर्थ रूपक होता है। स्वरूपार्थोऽपि भूतशब्द उत्तरपदस्थ—इदं जगत् तमोभूतमासीत्—तमोरूपमित्यर्थः। [illegible] फोड़ना। मतिशालिभि—मत्या शालन्ते शोभन्ते ते मतिशालिनस्तैः। उन लोगोंसे जो बुद्धिमें चमकते हैं। [illegible]—निष्फल नहीं होते; सफल होते हैं। नया—नीतिमार्ग। कियन्मात्रः (कियती मात्रा प्रमाणं यस्य)—किस गिनतीका। [illegible] बेचारा। [illegible]—

इसको एकदेशिसमास वा अवयविसमास कहते हैं। ('अह सर्वैक- देशसंख्यातपुण्याच्च रात्रेः' ।५।४।८७॥ चात् संख्याव्ययादेः। अह इत्यादि पूर्व होनेपर रात्रि शब्दसे समासान्त अच् प्रत्यय होता है। अर्थात् रात्रिका रात्र होता है। अहश्च रात्रिश्च अहोरात्र (द्वन्द्व), रात्रेः पूर्वं पूर्वरात्र; संख्याता चासौ रात्रिश्च संख्यातरात्र। इसीप्रकार-पुण्यरात्र, द्वयो रात्र्योः समाहारो द्विरात्रम्, अतिक्रान्तो रात्रिमतिरात्र (प्रादिसमास)। 'अह्नोऽह्न एतेभ्यः' ५।४।८८॥ सर्व इत्यादि पूर्व होनेपर अहन् को अह्न होता है। सर्वाह्ण, पूर्वाह्ण। परन्तु यदि संख्यावाचक वा पुण्य, सुदिन पूर्व हो तो अहन् को अह होता है, अह्न नहीं होता, पुण्याहम् (पुण्याह भवन्तो ब्रुवन्तु—स्वस्तिवाचन विधिमें यजमान ब्राह्मणोंसे प्रार्थना करता है।) द्वयोरह्नोः समाहार द्व्यह। रात्र, अह्न, अह, में अन्त होनेवाले द्वन्द्व तथा तत्पुरुष पुल्लिङ्गमें होते हैं। ('रात्राह्नाहाः पुंसि' २।४।२९॥)। पुण्य सुदिनाभ्यामह्नः क्लीबतेष्टा—पुण्याहम्। सुदिनाहम्। लालस—उत्सुक। चञ्चू—स्त्री०, चोंच। सपरिकरस्य। सेवकोंसे सहित। गर्त—र्तम्—र्ता—गड्ढा। समवाय—समूह। पञ्चत्वं यास्यति=मरेगा, पांच तत्त्वोंमें मिलेगा। मण्डूक—मेढक।

२।—अवनि-नी—पृथ्वी। सादरमभाणि—सादरम्—आदरसे साथ। अव्य०, क्रियावि०, अभाणि भण्‌का कर्मणि लुङ् प्रथम पु० एकवचन, स्थविरे-से वृद्ध। वेश्मवर=वेश्मसु वर, सप्त० तत्पु०, ऐसे स्थलोंपर षष्ठीका निषेध है। वेश्मानां वर तथा वेश्मसु वर ये निर्धारणषष्ठी तथा निर्धारणसप्तमीके उदाहरण हैं। वेश्मानां वर में समास नहीं हो सकता। न निर्धारणे २।२।१०॥—निर्धारणे या षष्ठी सा न समस्यते। नन्दिनी— लड़की। व्यवहारी—व्यापारी। उदयंसे—विवाह किया। सोदर—सगा भाई, समानमुदरं यस्य सः, समानके स्थानमें स हुआ है। प्रवहणम्—जहाज। पोत—नाव। अभिमन्त्रस्व—रम्, क्रट, आ, वि, ये पूर्व रहनेपर क्रम धातुसे आत्मनेपद होता है। समवप्रविभ्यः स्थः १।३।२२। कल्लोल—बड़ा तरङ्ग।

दीपोंसे प्रकाशसे हटाया जा सकता है, और बहुत गहिरा नहीं होता। 'यौवनप्रभव तम' उपमेय है, और 'साधारण तम' उपमान है। यहां उपमेयाधिक्यपर्यवसायी व्यतिरेक अलङ्कार है। रागमलावलेप =विषयप्रेमकी अशुद्धिसे उत्पन्न होनेवाला गर्व। अस्नानशौचवध्य =जो स्नानकी शुद्धिसे नष्ट नहीं हो सकता। गर्भेश्वरत्वम्—जन्मसिद्ध सार्वभौमता। अविनयाना समवाय =एषामेकैकमप्यविनयानामायतनं समवाय (उनका समूह) अविनयानामायतनमिति किमुत (किं वक्तव्यम्)—जब इनमें प्रत्येक अविनयका स्थान है, तब इनके समुदायकी क्या बात है। इसको कैमुतिक न्याय कहते हैं। अभिनवं यौवनं यस्य स अभिनवयौवनः तस्य भावः अभिनवयौवनत्वम्। इसी प्रकार अप्रतिमरूपत्वम् तथा अमानुषशक्तित्वम् का विग्रह करना चाहिये। कालुष्यम्—मालिन्य, कलुष-मटमैला। भवादृश —भवादृश्-श-क्ष-ये तीन रूप हैं। ऐसे २ और शब्दोंसे भी तीन रूप होते हैं, जैसे—तादृश्-श-क्ष। अपगतमल-मल —मलम्-धूल, मालिन्य, अपवित् विचार। गभस्ति-पु स्त्री—किरण। गभस्तिमत्—सूर्य। कल्याणाभिनिवेशी—कल्याणे अभिनिवेशः कल्याणाभिनिवेश, सोऽस्यास्तीति कल्याणाभिनिवेशी, तत्पु० स० को इन् प्रत्यय लगाया गया है।—जो अपने हितकी ओर लगा हुआ है। (अभिनिवेश—भक्ति, गाढ़प्रेम)। राग =१ रंग, २ प्रेम। एकान्तवक्रता=१ अत्यन्त टेढ़ापन, २ अत्यन्त टेढ़े मार्गसे चलना। चञ्चलता=१ फुर्ती, २ अस्थिरता। मोहनशक्ति=१ मोहित करनेकी शक्ति, २ वशीकरण। मद=१ नशा, २ गर्व। नैष्ठुर्यम्—१ कड़ापन, २ क्रूरता। इस प्रकार इन शब्दोंसे दो २ अर्थ हैं, और यहां अलङ्कार श्लेष है। दो अर्थोंमें एक पारिजातपल्लव, इन्दुशकल इत्यादिकी तरफ लगता है और दूसरा अर्थ लक्ष्मीकी तरफ। शकल —टुकड़ा। कालकूटम्—विष। विरहविनोदविहानि—वियोगको दूर करनेसे लहरा। पलायते—जब अय—त्वा आत्म से पूर्व परा होता है, तब परा के र् को ल् होता है। अय् के परोक्षभूतमें अयाञ्चक्रे—बभूव—आस रूप होते हैं।

अभिजन—उन्नत वंश। कामम्—मान लिया, चाहे ऐसा हो। समारोपि—जिसके उपनयन इत्यादि संस्कार पिताके द्वारा किये गये हैं। तरल—चञ्चल। अप्रतिबुद्ध—जिसको प्रकाश अथवा ज्ञान नहीं हुआ। मुखरीकृतवान्—मुझसे बुलवाया। कृत मयेदम्—कृतवानहमिदम। धातुके अकर्मक होनेपर अर्थमें भेद नहीं होता। गतोऽहं ग्रामम् और गतवानहं ग्रामम् का अर्थ एक ही है—मैं गांव गया। इदमेव—पुरुषमिव दुर्विनीता लक्ष्मी खलीकरोतीति। विजयस्व—वि तथा परा पूर्वक जि धातु आत्मनेपद है। विपराभ्यां जेः १।३।१८॥ सिद्धादेश—वह जिसकी आज्ञा अवश्य सफल हो।

८।—श्रुतिस्मृतिनिर्दिष्टोऽसपरमात्मलक्षणम्—जिसने वेद तथा धर्मशास्त्र-से आत्माका अनुभव किया है। परमहंसपरिव्राट्—सन्यासियोंके चार भेद हैं—कुटीचक, बहूदक, हंस, तथा परमहंस। इनमें उत्तरोत्तर अधिक श्रेष्ठता दिखाता है। इस प्रकार परमहंस सबसे श्रेष्ठ है। न हि—निश्चय। जब नदीका समीपका तट जलकर खाक हो जाता है तो कोई नहीं पार करना नहीं चाहता। इसी प्रकार जब मृत शरीर पक्षियोंसे खाया जाता या खाक हो जाता है, तो कोई इस संसारसे मुक्त होना नहीं चाहता। तो तुम क्यों मुक्त होना चाहते हो? पार और अवर (समीप तथा दूरका तट) से पारावार शब्द बना हुआ है, जिसका अर्थ समुद्र है। आए —धाड़ियाल। अपस्—न पक्षी। साध्ववादी —अब तुम ठीक कहते हो। पहिले तुमने झूठ क्यों कहा—'मैं एक विशिष्ट कुलमें ब्राह्मण और ब्रह्मचारी था, और अब मैं परमहंस हूं'। मृषोद्य—असत्य। अयोऽन्वय—अयो अन्वय यस्य = इस वंशका। प्रत्यभ्यज्ञासि०—तुमने शरीरको पहिचाना, जिसकी कई जातियां वंश तथा संस्कार है, जिस प्रकार आत्माको पहिचाना, जिसकी न जाति है, न वंश, और न संस्कार।

९।—परमानन्दमाधवम्—विष्णु जो परम आनन्दका आत्मा है। मा=लक्ष्मी+धव=पति। सत्—सत्ता या स्थिति, चित्—ज्ञान, और

दीपोंसे प्रकाशसे हटाया जा सकता है, और बहुत गहिरा नहीं होता। 'यौवनप्रभव तम' उपमेय है, और 'साधारण तम' उपमान है। यहां उपमेयाधिक्यपर्यवसायी व्यतिरेक अलङ्कार है। रागमलावलेप =विषयप्रेमकी अशुद्धिसे उत्पन्न होनेवाला गर्व। अस्नानशौचवध्य =जो स्नानकी शुद्धिसे नष्ट नहीं हो सकता। गर्भेश्वरत्वम्—जन्मसिद्ध सार्वभौमता। अविनयाना समवाय =एषामेकैकमप्यविनयानामायतन समवाय (इनका समूह) अविनयानामायतनमिति किमुत (किं वक्तव्यम्)—जब इनमें प्रत्येक अविनयका स्थान है, तब इनके समुदायकी क्या बात है। इसको कैमुतिक न्याय कहते हैं। अभिनव यौवन यस्य स अभिनवयौवन तस्य भाव अभिनवयौवनत्वम्। इसी प्रकार अप्रतिमरूपत्वम् तथा अमानुषशक्तित्वम् का विग्रह करना चाहिये। कालुष्यम्—मालिन्य, कलुष मटमैला। भवादृश—भवादृश्-श-क्ष-ये तीन रूप हैं। ऐसे २ और शब्दोंसे भी तीन रूप होते हैं, जैसे—तादृश्-श-क्ष। अपगतमरा-मल —मलम्-धूल, मालिन्य, अपवित्र विचार। गभस्ति पु स्त्री—किरण। गभस्तिमत्—सूर्य। कल्याणाभिनिवेशी—कल्याणे अभिनिवेश कल्याणाभिनिवेश, सोऽस्यास्तीति कल्याणाभिनिवेशी, तत्पु० स० को इन् प्रत्यय लगाया गया है।—जो अपने हितकी ओर लगा हुआ है। (अभिनिवेश—भक्ति, गाढ़प्रेम)। राग =१ रंग, २ प्रेम। एकान्तवक्रता=१ अत्यन्त टेढ़ापन, २ अत्यन्त टेढ़े मार्गसे चलना। चञ्चलता=१ फुर्ती, २ अस्थिरता। मोहनशक्ति=१ मोहित करनेकी शक्ति, २ वशीकरण। मद=१ नशा, २ गर्व। नैष्ठुर्यम्—१ कड़ापन, २ क्रूरता। इस प्रकार इन शब्दोंके दो २ अर्थ हैं, और यहां अलङ्कार श्लेष है। दो अर्थोंमें एक पारिजातपल्लव, इन्दुशकल इत्यादिकी तरफ लगता है और दूसरा अर्थ लक्ष्मीकी तरफ। शकल —टुकड़ा। कालकूटम्—विष। विरहविनोदचिह्नानि—वियोगको दूर करनेके उपाय। पलायते—जब अय—म्वा आत्म के पूर्व परा होता है, तब परा के र् को ल् होता है। अय् के परोक्षभूतमें अयाञ्चक्रे—बभूव—आस रूप होते हैं।

अर्थात् मैं कभी स्वतन्त्र नहीं। यथावत्—यथायोग्य। वल्गुश्च—सुन्दर। सुरभि—सुन्दर। भावित—पवित्र। चक्रवाक—यह पत्ती रातको अपनी प्रियासे वियुक्त होता है। पत्तिणा=जटायुणा। कन्दरा—गुहा। आसन्न—समीप।

१३।—भरतर्षभ—भरतेषु ऋषभस्तत्सम्बुद्धौ भरतर्षभ—भरत वंशीयोंमें श्रेष्ठ। ऋषभ, शार्दूल, सिंह, पुङ्गव इत्यादि समासमें उत्तरपदके तरह प्रयुक्त होते हैं और इनका अर्थ 'श्रेष्ठ' होता है। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे—उपमित अर्थात् उपमेयका व्याघ्र इत्यादिके साथ समास होता है, जब साधारण धर्मका वाचक कोई पद न हो। पुरुष, व्याघ्र इव पुरुषव्याघ्रः, पर पुरुषो व्याघ्र इव शूरः। यहां 'शूर' यह साधारण धर्मवाचक पद है, इसलिये समास नहीं होता। नृसोम—ना सोम इव। श्री—सौन्दर्य, औदार्य, इत्यादिकी शोभा। पद्मा—लक्ष्मी। मकरध्वजस्य—प्रद्युम्नका। प्रगल्भे—ढीठ आदमीमें। देवपरे=देव परं प्रधान वस्तु यस्य स देवपरः तस्मिन् देवपरे। उदीर्ण—उदार प्रकृतिका। (उद्+ईर्—अ आत्म का भूतकृ)। साङ्करिके=जिसमें वर्णसङ्कर है। अनुपक—दोषदृष्टि करनेवाला। कृतात्मन्—जितेन्द्रिय, पवित्र। स्वाध्यायनित्य—वेदाभ्यासमें लगा हुआ, नित्य=निमग्न। संवृतमनोरथेषु—उन लोगोंमें जिनके अभिप्राय गुप्त है, जिनके मनमें एक और वचनमें दूसरी बात है।

१४।—तनूरुह—केश। कल्यगता—कल्य प्रातरपर्युख वा—प्रातःकाल। आकीर्णम् (आ+कॄ (किरति) तु पर का भूत कृदन्त)—व्याप्तम्—भरा हुआ। तपस्विनी—बेचारी (दीनता दिखाता है)। कृच्छ्रम्—कष्ट। भेषजम्—औषध। शकुनिघ्नेन—शकुनि हन्तीति शकुनिघ्नस्तेन—बहेलियेसे। अग्निसाक्षिकम्—अग्नि साक्षी यस्मिन्स्तत्। एतत्—भर्ता हि परं दैवमित्येतत्। स्तबक—गुच्छा।

१५।—ऋच्छति—ऋ (ऋच्छ्) भ्वा पर वर्त म पु ए व।

आनन्द ( सुख ) ये तीन परमात्माके स्वरूप हैं । वक—बगुला । वञ्चनम् —ठगना । कार्यकाल = उनके उपयोगका समय । सिता—स्त्री.—मिश्री।

१० ।—अर्क—सूर्य । लोकपाल—लोकके पालक । तपन—सूर्य । वैश्रवण—कुबेर । वित्ताप्पत्यो—वित्तपति—धनपति—कुबेर, और अप्पति —जलपति—वरुण । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते— पतिशब्द जो वित्ताप द्वन्द्वके अन्तमें है, वित्त तथा अप् दोनोंके साथ सम्बद्ध होता है । अर्थात् इस शब्दका अर्थ है—वित्तपति तथा अप्पति। बालीफल—फलके । द्रुतम्—शीघ्र । विद्रुत—भागा हुआ । मनुष्य इति—उसको मनुष्य जानकर । दुरुपसर्पिणम्—जो उसके पास कठिनतासे पहुंच सकता है ।

११ ।—इक्ष्वाकु—इक्ष्वाकु राजाके वंशका । बीजमुष्टिं प्रकीर्यते= मुट्ठीभर बीज नहीं छींटे जाते, बीज नहीं बोये जाते ( क्योंकि फसिलके समय चोरोंका डर रहता है—फलकाले लुण्टाकशङ्कया) पितुः पुत्रो—वधे= पुत्र पिताकी आज्ञा नहीं मानता, और न स्त्री पतिकी आज्ञा मानती है क्योंकि आज्ञाओंको उल्लङ्घन करनेवालेको दण्ड देनेवाला कोई नहीं। अत्याहितम्—बड़ा भय । 'अत्याहित महाभीति' इत्यमरः । विधाविन — अच्छे हालवाले । हायन —नप् वर्षम् । क्षेम—कुशल । पथ्यम्—हित वस्तु। विभजन्—विभाग करता हुआ । स्वकम्—जीवन । सत्य च धर्मध—सत्य तथा धर्मके प्रवर्तक । महता वृत्तेन—यमको केवल पापियोंके दण्ड करने की शक्ति है, कुवेरको केवल धन देनेकी, इन्द्रको केवल मनुष्योंके रक्षण करने की, और वरुणको केवल उनको सन्मार्गपर ले जानेकी शक्ति है, परन्तु रामामें इन चारों शक्तियोंके रहनेसे वह अपने बड़े चरित्रसे सबसे श्रेष्ठ है ।

१२ ।—नाना—अथवा भिन्न । व्याल —गज, सर्प । सन्निरुष्य—समीप प्रघृताञ्जलि —जो प्रणामार्थ लिये हाथ जोड़े हुए है । परवानस्मि—जितने = जब आप मेरे साथ है तो मैं चाहे १०० वर्ष तक आपका अधीन हूं

अर्थात् मैं कभी स्वतन्त्र नहीं। यथावत्—यथायोग्य। सङ्काश—तुल्य। सुरभि—सुन्दर। भावित—पवित्र। चक्रवाक—यह पक्षी रातको अपनी प्रियासे वियुक्त होता है। पत्तिका=सहायता। कन्दरा—गुहा। आसन्न—समीप।

१३।—भरतर्षभ—भरतेषु ऋषभस्तत्सम्बुद्धौ भरतर्षभ—भरत वंशीयोंमें श्रेष्ठ। ऋषभ, शार्दूल, सिंह, पुङ्गव इत्यादि समासके उत्तरपदके तरह प्रयुक्त होते हैं और इनका अर्थ 'श्रेष्ठ' होता है। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥' उपमितं व्याघ्रादिभिः सामान्याप्रयोगे—उपमित अर्थात् उपमेयका व्याघ्र इत्यादिके साथ समास होता है, जब साधारण धर्मका वाचक कोई पद न हो। पुरुष, व्याघ्र इव पुरुषव्याघ्र, पर पुरुषो व्याघ्र इव शूर। यहाँ 'शूर' यह साधारण धर्मवाचक पद है, इसलिये समास नहीं होता। नृसोम—ना सोम इव। श्री—सौन्दर्य, औदार्य, इत्यादिकी शोभा। पद्मा—लक्ष्मी। मकरध्वजस्य—प्रद्युम्नका। प्रगल्भ—ढीठ आदमीमें। देवपरे=देव परं प्रधान वस्तु यस्य स देवपर तस्मिन् देवपरे। उदीर्ण—उदार प्रकृतिका। (उत्+ईर्—अ आरम्भ का भूतकृ )। साङ्कुरिके=जिसमें वर्णसङ्कर है। अनूयक—दोषदृष्टि करनेवाला। कृतात्मन्—जितेन्द्रिय, पवित्र। स्वाध्यायनित्य—वेद,भ्यासमें लगा हुआ, नित्य=निमग्न। मगुप्तमनोरथेषु—उन लोगोंमें जिनके अभिप्राय गुप्त हैं, जिनके मनमें एक और वचनमें दूसरी बात है।

१४।—तनुमद—थोड़ा। कल्पगता—कल्य प्रातरथर्मुख वा—प्रातःकाल। आकीर्णम् ( आ+कॄ (किरति) तु पर का भूत कृदन्त )—व्याप्तम्—भरा हुआ। तपस्विनी—बेचारी ( दीनता दिखाता है )। कृच्छ्रम्—कष्ट। भेषजम्—औषध। शकुनिघ्नेन—शकुनि हन्तीति शकुनिघ्नस्तेन—बहेलियेसे। अग्निसाक्षिकम्—अग्नि साक्षी यस्मिन्कर्मणि तत्। एतत्—भर्ता हि शरणं परमित्येतत्। साहक—शुष्क।

१५।—ऋच्छति—ऋ ( कच्छ ) ... पर वर्त म पु ए व

आनन्द ( सुख ) ये तीन परमात्माके स्वरूप हैं। बक—बगुला। वञ्चनम् —ठगना। कार्यकाल=उनके उपयोगका समय। विता—स्त्री—मिसरी।

१०।—अर्क—सूर्य। लोकपाल—लोकके पालक। तपन—सूर्य। वैश्रवण—कुबेर। वित्ताप्पत्यो—वित्तपति—धनपति—कुबेर, और अप्पति—जलपति—वरुण। द्वन्द्वान्ते श्रूयमाण पद प्रत्येक सम्बध्यते—पतिशब्द जो वित्ताप द्वन्द्वके अन्तमें है, वित्त तथा अप् दोनोंके साथ अन्वित होता है। अर्थात् इस शब्दका अर्थ है—वित्तपति तथा अप्पति। व्यलीकेन—छलसे। द्रुतम्—शीघ्र। विद्रुत—भागा हुआ। मनुष्य इति—उसको मनुष्य जानकर। दुरुपसर्पिणम्—जो उसके पास कठिनतासे पहुंच सकता है।

११।—इक्ष्वाकु—इक्ष्वाकु राजाके वंशवाले। बीजमुष्टि प्रकीर्यते= मुट्ठीभर बीज नहीं छीटे जाते, बीज नहीं बोये जाते ( क्योंकि फसिलके समय चोरोंका डर रहता है—फलकाले लुण्टाकशङ्कया) पितु पुत्री—वशे= पुत्र पिताकी आज्ञा नहीं मानता, और न स्त्री पतिकी आज्ञा मानती है। क्योंकि आज्ञाओंको उल्लङ्घन करनेवालेको दण्ड देनेवाला कोई नहीं। अत्याहितम्—बड़ा भय। 'अत्याहित महाभीति' इत्यमर। विघासिन—अच्छे दांतवाले। हायन—नमुवर्षम्। क्षेम—कुशल। पथ्यम्—प्रिय वस्तु। विभजन्—विभाग करता हुआ। स्वकम्—जीवन। सत्य च धर्मश्च—सत्य तथा धर्मके प्रवर्तक। महता वृत्तेन—यमको केवल पापियोंके दण्ड करने की शक्ति है, कुबेरको केवल धन देनेकी, इन्द्रको केवल मनुष्योंके रक्षा करने की, और वरुणको केवल उनको सन्मार्गपर ले जानेकी शक्ति है। परन्तु राजामें इन चारों शक्तियोंके रहनेसे वह अपने बड़े चरित्रसे उन सबसे श्रेष्ठ है।

१२।—नाना—अन्य भिन्न। व्याल—गज, सर्प। सन्निकृष्ट—समीप। सप्रताञ्जलि—जो प्रणामके लिये हाथ जोड़े हुए है। पारवानस्मि—त्वयि= जब आप मेरे साथ हैं तो मैं चाहे १०० वर्ष तक आपका अधीन हूं;

उदाहरण । अशनि कल्पित एव वेधसा—इस मालाको देवने वज्र बनाया है। अशनि विधेय है। वाक्यमें दो भाग होते है—उद्देश्य और विधेय। इनमे विधेय प्रधान रहता है। निश्चायक सर्वनामका लिङ्ग विधेयके अनुसार होता है। विधेयप्राधान्यादेव इति पुंलिङ्गता। इसी प्रकार—शैत्य हि यत्सा प्रकृतिर्जलस्य। कृतपूर्वम्—पूर्व कृत कृतपूर्वम्। सुपसुप्-समास। शर्वपति —शर्वेन पति न स्वर्यन—नासका राजा। भावनिव-न्धना—(भाव स्वभाव)—स्वाभाविक। शर्वरी—स्त्री—रात्रि। द्वन्द्वचर—जोड़ेसे चलनेवाले। चकवा सर्वदा अपनी प्रियाके साथ चलता तथा रात-को वियुक्त होता है। पतत्रिणम्—चक्रवाकको। पतत्र डैना। वामोरु—वामौ सुन्दरौ ऊरु जङ्घे यस्याः सा वामोरु तत्सम्बुद्धौ वामोरु। (समासमें स्त्रीलिङ्गमें ऊरु का ऊरु होता है—यदि समासका पूर्वपद उपमानवाचक या संहित, वाम, इनमें कोई हो। जैसे—रम्भोरू, करभोरू) ('ऊरूत्तरपदादौ-पम्ये' ४।१।६९॥ 'संहितशफलक्षणवामादेश्च' ४।१।७०॥)। कलम्—अव्यक्त और मधुर। अन्यभृतासु—कोकिलाओंमें। परभृता, अन्यभृता (दूसरेसे पोषित) का अर्थ कोयल है। क्योंकि इनके अडे कौओंसे बढ़ाये जाते हैं। अन्य पर परभृत् (पर बिभर्तीति, जो दूसरेका पोषण करता है) का अर्थ कौआ है। पृषतीषु—मृगियोंमें। विभ्रमा—विलास। कलाविधौ—कलाओंके करनेमें करुणाविमुखेन—विगत मुख यस्य स विमुख, करुणाया विमुख करुणाविमुखस्तेन।

२०।—अर्थोष्मणा—धनकी गरमीसे। त्रिलोकीतिलक—भूषाणा त्रयाणा समाहारस्त्रिलोकी (समाहारद्विगु। इसी प्रकार अष्टाध्यायी, पञ्चमूली, पञ्चवटी) त्रिलोक्यास्तिलक भूषण त्रिलोकीतिलक, तीनों लोकका भूषण। शीतसितया—शीता चासौ सिता च शीतसिता तया। शीतल और श्वेत (गङ्गा), हृदयको आनन्द देनेवाली और निष्कलङ्क।

पात्र पात्रयति०—दीपक पात्रको मलिन करता है, परन्तु सज्जनोंके साथ मैत्री पुरुषको पवित्र, तथा अपवित्र विचारोंसे रहित बनाती है। दीपक

१६।—त्रैविद्यवृद्धान्—तिस्रो विद्या अधीयते विदन्ति वा त्रैविद्यास्तेषु वृद्धास्तान्। वैदिकोंमें वृद्ध। परावरज्ञा—परं च अवरं च परावरे ते जानन्तीति—भूत तथा वर्तमानको जाननेवाले। स्व प्रवृद्ध—शरीरात्—स्व प्रवृद्ध सकल मनोज सन्तापनीय शरीरात् प्रणुदन्—दूरीकुर्वन्नित्यर्थः।

१७।—भैषजमेतद्—चिन्तयेत्—यदेतत् (दुःख) नानुचिन्तयेत्तदेतत्। अननुचिन्तनमित्यर्थः। दुःखस्य भैषजम्। दुःखका विचार न करना ही उसको दूर करनेकी दवा है। स्पृहयेत्—लोभ करे। स्निग्धत्व—सप्रियम—अज्ञानवश विषयोंका प्रेम एक आपत्ति है और मरणका कारण है। वया गच्छन्न तिष्ठति—वय जाता हुआ रुकता नहीं। लगातार चला ही जाता है। यदि—'वयोऽगच्छन्न तिष्ठति' पाठ हो तो उसका अर्थ—वय विना चले नहीं ठहर सकता। अध्यात्मरति—आत्मन्यधिकृत्याध्यात्मम्, अध्यात्म रतिर्यस्य स। निरामिष—सांसारिक विषयोंके प्रेमसे मुक्त।

१८।—पुत्रक—प्रियपुत्र। गुहा प्रविष्टम्—हृदयके भीतर बैठा हुआ। न हि प्रतीक्षते—कृतम्—मृत्यु यह देखनेकी प्रतीक्षा नहीं करता कि इसकी जीवनका कार्य समाप्त हुआ वा नहीं। न देहभेदे-विजानताम्—यह न समझना कि शरीरका परिवर्तन मरण है। जब मनुष्य मरता है तो उसका आत्मा दूसरे शरीरमें जानेके लिये प्रथम शरीरको छोड़ता है। न तेन किञ्चिन्न प्राप्तम्—तेन किञ्चिन्न प्राप्तमिति न अपि तु प्राप्तमेव। द्वौ नञौ प्रकृतार्थं दृढीकुरुत—दो न प्रकृत अर्थको दृढ़ करते है।

१९।—बाष्पगद्गदम्—वाष्पैः गद्गदं विशीर्णाक्षरं यथा स्यात्तथा आसुओंसे गला रुधनेके कारण लड़खड़ाते अक्षरोंमें। अय—लोहा। केव कथा शरीरिषु—चेतन जीवों की बात ही क्या है? जब लोहेके समान अचेतन पदार्थ भी गरमीसे मुलायम हो जाता है तो चेतन जीवों का शोकसे सन्तप्त तथा मृदु होनेमें आश्चर्य क्या है। हन्त—हाय! प्रहरिष्यत—मारनेको चाहनेवाले। अथ वा—दूसरे पक्षमें—पक्षान्तरे इत्यर्थः। हिम—निर्यापित्त—वो ओसके गिरनेसे नष्ट होती है। पूर्वनिदर्शनम्—पहिला

गुण ( बत्ती ) को नष्ट करती है, पर सज्जनोंकी मित्रता गुणोंको नष्ट नहीं करती, उनको बढ़ाती है। दीपक स्नेह ( तेल ) को नष्ट करता है, सज्जनोंकी मित्रता स्नेह (प्रेम) को नष्ट नहीं करती। दीपक मल (काजल) को उत्पन्न करता है, सज्जनोंकी मित्रता मल अर्थात् दुष्ट विचारोंको उत्पन्न नहीं करती। दीपक दोषा (रात्रि) के अन्तमें शोभा नहीं देता, सज्जनोंकी मित्रता दोषोंके नष्ट होनेसे शोभा देती है। दीपक चञ्चल है; सज्जनोंकी मैत्री चञ्चल नहीं। इस प्रकार सच्चरित्र पुरुषोंके यहां सत्समागम एक अवर्णनीय दीपक है। यहांपर सज्जनोंकी मित्रता साधारण और दीपकोंसे श्रेष्ठ कही गयी है। इस प्रकार उपमेय उपमानसे श्रेष्ठ होनेके कारण व्यतिरेक अलङ्कारकी ध्वनि निकलती है। पवित्रयति—(नामधातु, पवित्र करोति)।

नार्घन्ति—अर्घो मूल्यमर्घन्ति न भवन्तीत्यर्थ ( नामधातु )।

प्रतिभावत—जिसको कल्पनाशक्ति है। प्रतिभा—"प्रज्ञा नवनवो-न्मेषशालिनी प्रतिभा मता"—नवीन२ कल्पनाओंसे चमकनेवाली बुद्धि। प्रतिभाके बिना उत्तम काव्य नहीं बन सकता। कस्यचित्—कस्यचिदेव न सर्वस्य।

नाकवित्व—कविता न बनानेसे कर्तव्यकी हानि रोग, वा दण्ड नहीं होता, सज्जन कहते हैं कि दुष्टकाव्य बनाना साक्षात् मरण (कीर्तिका नाश) अर्थात् पूर्ण अनादर है।

व्याख्यागम्यानि—यदि ऐसी ( कृत्रिम सौन्दर्यपूर्ण ) कविताओंका अर्थ शास्त्रोंके समान केवल टीकाओंके सहारे लग सकता है, तो निश्चय यह तीक्ष्ण बुद्धि लोगोंके लिये सुदिन है, परन्तु हाय! मन्दबुद्धिवालोंकी दुर्दशा है। इसका अर्थ यह है कि कविता स्पष्ट और सुबोध होनी चाहिये। इसके समझनेके लिये शास्त्रोंके समान टीकाओंकी आवश्यकता न होनी चाहिये। दुर्मेधस—'नित्यमसिच् प्रजामेधयोः' ५।४।१२२॥ ३३ वां पाठ देखो। प्रजा तथा मेधान्त बहुव्रीहिसे असिच् समासान्त

प्रत्यय होता है। अर्थात् प्रजा तथा मेधाका प्रजस् तथा मेधस् होता है, यदि उसके पूर्व नञ् ( अ वा अन् ), दुस्, और सु हो। ( अप्रजा सुप्रजा, अमेधा इत्यादि )।

मूर्धजा —मूर्धनि जायन्ते इति मूर्धजा केशा ।

जीवमान —जीव्-त्वा पर है, पर यहां ताच्छील्यके अर्थमें आया है। जीवमान का अर्थ है जिसको जीनेकी आदत है। 'ताच्छील्यवयोवचनशक्तिषु चानश्' ।३।२।१२९।—चानश् (आन, आत्म का वर्तमान कृदन्त प्रत्यय) ताच्छील्य अर्थमें धातुओंको लगाया जाता है। यह इन अर्थोंमें भी लगाया जाता है जहां वयस्का बोध हो वा शक्ति मालूम हो। भोग भुञ्जान —जिसको सुख उपभोग करनेकी आदत है। कवच बिभ्राण —जो कवच धारण करने योग्य वयस् को पहुंचा। शत्रून्निघ्नान —जिसको शत्रुओंके मारनेकी शक्ति है।

भागधेयम्—भाग एव भागधेयम्—धेय स्वार्थवाचक प्रत्यय है, अर्थात् इसके लगानेसे प्रकृतिके अर्थमें कोई भेद नहीं होता। नाम एव नामधेयम्, बाल एव बालक ( क स्वार्थवाचक है ), सुखमेव सौख्यम्।

इतरतापशतानि—अरसिकोंके सामने रसपूर्ण वचन कहनेके कष्टको छोड इतर सैकडों कष्ट।

अस्था सखे०—यह अन्योक्ति वा अप्रस्तुतप्रशंसा का उदाहरण है। जब अप्रस्तुत ( अवर्णनीय ) की प्रशंसा अर्थात् कथनसे प्रस्तुत ( वर्णनीय ) की प्रतीति होती है तब अप्रस्तुतप्रशंसा अलङ्कार होता है। अरसिकोंके सामने रसपूर्ण वचन कहना वैसा है जैसे बहिरोंके आगे हुए ज्ञानपर मुश्किलकी होती। कविका अभिप्राय विद्वान्को उपदेश देनेमें है कि वह अरसिकोंके सामने अपनी विद्वत्ता न दिखावे।

ईवदतका —ईव दत्त निन्द्र येषा ते। यहां निष्ठान्त वा भूतकृदन्त उत्तरपदके समान प्रयुक्त हुआ है। आहिताग्नि वा अग्न्याहित ( जिसने अग्निका आधान किया है ) दोनों रूप होते हैं। कृतानभिज्ञाः—

